अम्बिक
अक्षर
कालरात्र
खातीत
गायत्र
घण्टाधारण
ङार्णात्मक ३५०
चण्ड
छाय
जय
झङ्कारण
ञार्णात्मक (ज्ञानरूप)
टङ्कहस्त
ठङ्कारण
डामर
ढङ्कारण
णङ्कार (णार्ण) ३६०
तामस
स्थानदेव (स्थाणो)
दाक्षायण
धातः
नन्दिन् (नर)
पार्वत
फट्कारण
बन्धन (बन्धिन्)
भद्रकाल
महामाय ३७०
शशिन्
षण्ढ
सरस्वत्
हंसवत्

त्रिपुरेशिन्
महोन्मनः
श्रीविद्याकामधुग्
अमृतपीठेश्वरकामधुग्
सुधासूकामधुग्
अमृतेश्वरकामधुग् ३८०
अन्नपूर्णकामधुग्
गरिमासिद्धे
महायोने (मुद्रा)
स्मार्तदर्शन (जितेन्द्रदर्शन)
त्रिवर्गसाधनचक्रस्वामिन्
मातृकायोगिन्
सर्वसंक्षोभण
सर्वविद्रावण
सर्वाकर्षण
सर्ववशङ्कर ३९०
सर्वोन्मादन
सर्वमहाङ्कुश
सर्वखेचर
सर्वबीज
सर्वयोने
सर्वत्रिखण्ड
असिताङ्गभैरवसहित ब्राह्मि
उन्मत्त „ माहेश्वरि
चण्ड „ वाराहि
भीषण „ माहेन्द्रि ४००
रुरु „ कौमारि
कपाल „ वैष्णवि
क्रोध „ चामुण्डे
संहार „ महालक्ष्मि
अणिमासिद्ध

गरिमासिद्ध
लघिमासिद्ध
महिमासिद्ध
ईशित्वसिद्ध
वशित्वसिद्ध ४१०
प्राकाम्यसिद्ध
भुक्तिसिद्ध
इच्छासिद्ध
प्राप्तिसिद्ध
सर्वकामसिद्ध
त्रिपुर
उन्मन
श्रीविद्यालक्ष्म
एकाक्षरीलक्ष्म
महालक्ष्म ४२०
त्रिशक्तिलक्ष्म
सर्वसाम्राज्यलक्ष्म
अणिमासिद्ध
सर्वसंक्षोभण (मुद्रा)
चार्वाकदर्शन
त्रैलोक्यमोहनचक्रस्वामिन्
प्रकटयोगिन्
कच्छपनिधे
मुकुन्दनिधे
नन्दनिधे ४३०
नीलनिधे
शङ्खनिधे
पद्मनिधे
महापद्मनिधे
मकरनिधे
पश्चिमाम्नायनायक घोरकुब्जिक
उत्तराम्नायनायक सिद्धलक्ष्म
पूर्वाम्नायनायकोन्मनः
दक्षिणाम्नायनायक आदिकाल
तिरस्करण ४४०
वनदुर्ग
कामरती
वसन्तप्रीती
वज्र
शक्ते
दण्ड
खड्ग
पाश
अङ्कुश
गदे ४५०
त्रिशूल
पद्म
चक्र
इन्द्र
अग्ने
यम
निर्ऋते
वरुण
वायो
सोम ४६०
ईशान
ब्रह्मन्
अनन्त
वटुकभैरव
सर्व-योगिन्
क्षेत्रपाल
गणपते
वनदुर्गे
अघोर
सुदर्शन ४७०
शरभ नमो नमः।

३- समष्टिपूजनम् :—

सृष्टिनिलयात्मक-पूर्वाम्नायेशी- सृष्टिसृष्टिमहाभुवनेश्वरीविलीन-सृष्टिसृष्टिमहाकामेश्वरीसभैरवशिवादिस्वगुरुपूर्वक-पूर्वाम्नायात्म-ककामराजकूटदेवताश्रीपादुकां पूजयामि तर्पयामि नमस्करोमि।

(एवं पूर्ववत् पूजादि विधाय ततः परं—)

तत्त्वज्ञे - त
तत्त्वज्ञानप्रबोधिनि - त्
सर्वशास्त्रार्थवादिनि - स
विविधार्थस्वरूपिणी - वि
तुर्यामार्गप्रदर्शिनि - तु
रमे (रसदे) - र्
वयोवस्थाविवर्जिते - व
रेवातीरनिवासिनि - रे
निखिलागमबोधिनि - णि ४८०
यमुने - य
मोक्षदे - म्
भक्ताभीष्टफलप्रदे - भ
रम्ये (रसज्ञे) - र
गोवर्धनविवर्धिनि - गो
देशोपद्रवनाशिनि - दे
वक्रतुण्डवरप्रदे - व
स्पन्दरूपे - स्
योगगम्ये - य
धीरवन्द्ये - धी ४९०
महावैरिविनाशिनि - म
हितकर्मफलप्रदे - हि
धिषणे - धि
योधिनि - यो
योगक्षेमविहारिणि - यो
नवसिद्धिसमाराध्ये - नः
प्रभवे - प्
रोगप्रशमनि - र्-
चोरघ्नि - चो
दक्षिणामूर्तिरूपिणि - द ५००
यात्रापापविवर्जिते - या
तुरीयावस्थागामिनि - त्
परब्रह्मात्मिके - प
रोगेशि - रो
रमणीप्रिये - र
जगत्प्रिये - ज
सेव्यमाने - से
सागराम्ब - सा
वेदाक्षरपरीताङ्गि - व
दोहिंनि - दो ५१०
माधवि - म्
बालात्रिपुरसुन्दरि
महात्रिपुरसुन्दरि
चक्रस्थसिद्धे
चक्रस्थमुद्रे
स्पन्दी-चक्राधिष्ठात्रीमहात्रिपुरसुन्दरि
चक्रस्थयोगिनि
कालि
तारे
षोडशि ५२०
भुवनेश्वरि
त्रिपुरभैरवि
छिन्नमस्ते
धूमावति
बगले
मातङ्गि
कमले
दशविद्यामय-महात्रिपुरसुन्दरि
पञ्चवक्त्रमहाकालि

सिद्धलक्ष्मि (अथवा रक्तदन्तिके) ५३०
दशवक्त्रमहाकालि
कमले
वगलामुखि
महालक्ष्मि
चण्डमातङ्गि
छिन्नमस्ते
महासरस्वति
चामुण्डे (अथवा उग्रतारे)
भद्रकालि (अथवा मोहिनीमातङ्गी-चामुण्डे)
उपाम्नायनायिके त्रिशक्तिचामुण्डे (सादिकूटात्मिके) ५४०
उग्रचण्डोपाम्नायसहितमहात्रिपुर-सुन्दरि
वालात्रिपुरसुन्दरि
प्राकाम्यसिद्धे
महायोनिमुद्रे
स्पन्दीचक्राधिष्ठात्री-महात्रिपुरसुन्दरि
निगर्भरहस्ययोगिनि
लयकामकलागुह्यकालीसहितसंहारभैरव
महाभुवनेश्वरीसहितसदाशिवभैरव
दक्षिणकालीसहितमहाकालभैरव
महोग्रतारासहिताक्षोभ्यभैरव ५५०
सिद्धलक्ष्मीपञ्चवक्त्रदशवक्त्रमहाकाली-सहितरुद्रभैरव
बगलाकमलामहालक्ष्मीसहितविष्णुभैरव-
छिन्नमस्ताचण्डमातङ्गीमहासरस्वती-सहितब्रह्मभैरव
चामुण्डासहितभीषणभैरव
उग्रचण्डासहितपाण्डुनाथभैरव
वज्रकुब्जिकासहितशिखास्वच्छन्दभैरव
शारदे
वालात्रिपुरासहितत्रिपुरभैरव
वालासुन्दरीसहितवटुकभैरव
बालामहात्रिपुरसुन्दरीसहित-त्रिपुरेश्वरभैरव ५६०
कादिविद्येश्वरि कालि
हादिविद्येश्वरि सुन्दरि
सादिविद्येश्वरि तारे
ललितामहात्रिपुरसुन्दरीसहितललि-तेश्वरभैरव
उर्ध्वाम्नायेश्वरीलघुषोडशीसहित-लघुकामेश्वरभैरव
महाषोडशीसहितमहाकामेश्वरभैरव
ललितामहात्रिपुरसुन्दरि
कामकलागुह्यकालि
सर्वकामसिद्धे
त्रिखण्डामुद्रे ५७०
मुक्तिप्रद-बैन्दवात्मक-सामरस्य-चक्राधि-ष्ठात्रि महात्रिपुरसुन्दरि
परापररहस्ययोगिनि नमो नमः ।

४- समष्टिपूजनम् :—

अनाख्या-निलयात्मक-उत्तराम्नायेशीकामकलागुह्यकाली-विलीन-अनाख्यामहात्रिपुरसुन्दरी — सभैरवशिवादिस्वगुरुपूर्वकोत्तरा—म्नायात्मक-अनाख्याकूट देवताश्रीपादुकां पूजयामि तर्पयामि नमस्करोमि । (एवं पूर्ववत् पूजादि विधाय ततः परं—)

(बिन्दावुपरि प्रणवं विचिन्त्य—)

ऋक्स्वरूपिणि ब्रह्माणि
यजुःस्वरूपिणि रुद्राणि
सामस्वरूपिणि वैष्णवि
अम्ब
अम्बिके
अम्बालिके
विद्ये
अविद्ये ५८०
परशिव
सर्वमन्त्रेश्वरि
सृष्टिसुन्दरि
स्थितिसुन्दरि
लयसुन्दरि
अनाख्यासुन्दरि
भासासुन्दरि
ऊर्ध्वाम्नाय-महात्रिपुरसुन्दरि
महाकामेश्वरि समयानित्ये
महावज्रेश्वरि समयानित्ये ५९०
महाभगमालिनि समयानित्ये
बालामहात्रिपुरसुन्दरि समयानित्ये
शुक्लचरण
रक्तचरण
मिश्रचरण

विश्रान्तिचरण
निर्वाणचरण
तुरीयचरण
तुरीयातीतचरण
षडन्वयशाम्भव ६००
परमेश्वरशाम्भव
विच्चेश्वरशाम्भव
हंसेश्वरशाम्भव
संवर्तेश्वर-शाम्भव
द्वीपेश्वर-शाम्भव
नवात्मेश्वर-शाम्भव
वाग्भवकूट (कूटोच्चारणम्)
कामराजकूट ”
शक्तिकूट ”
महात्रिपुरसुन्दरि (चक्रनायिका षोड-
शाक्षरी लघुषोडशी) ६१०
महात्रिपुरसुन्दरि (उर्ध्वाम्नायनायिका-
सप्तदशाक्षरी)
सर्वकामसिद्धे
त्रिखण्डामुद्रे
कौलदर्शनपरब्रह्मात्मकसामरस्यचक्राधि-
ष्ठात्री-महात्रिपुरसुन्दरि
परापररहस्ययोगिनि

(बिन्दुमध्ये षट्कोणं विभाव्य तत्र अर्धनारीश्वरसहितं महाशाम्भवं विचिन्त्य-)

निर्वाणभैरवमहात्रिपुरसुन्दरि,
षट्पञ्चाशत्संख्याकपार्थिवरश्मिसहितनवात्मेश्वर
द्विपञ्चाशत्संख्याक-जलरश्मिसहित-द्वीपेश्वर
द्विषष्टिसंख्याक-अग्निरश्मिसहितसंवर्तेश्वर
चतुःपंचाशत् संख्याकवायुरश्मिसहितहंसेश्वर ६२०
द्विसप्ततिसंख्याक-आकाशरश्मिसहितविच्चेश्वर
चतुःषष्टिसंख्याक-मानसरश्मिसहितपरेश्वर

पूर्वाम्नायनिर्वाण-भुवनेश्वरि
पश्चिमाम्नाय-निर्वाण-कुब्जिके

दक्षिणाम्नाय-निर्वाण-दक्षिणकालि    उत्तराम्नाय-निर्वाणगुह्यकालि

अधराम्नाय-निर्वाण-महोग्रतारे    उर्ध्वाम्नायनिर्वाणश्रीमहात्रिपुरसुन्दरि

चतुर्दशबीजसहित-द्विकूटात्मिका-निर्वाणबगले (समयाविद्ये) ६३०

द्वादशबोजसहित-चतुष्कूटात्मिका-निर्वाण-कालदात्रि (समयाविद्ये)

दशजीजसहित-षट्कूटात्मिका-निर्वाण जयदुर्गे (समयाविद्ये)

अष्टबीजसहित-अष्टकूटात्मिका-निर्वाणछिन्नमस्ते (समयाविद्ये)

षड्वीजसहितदशकूटात्मिका-निर्वाणमहा-त्रिपुरसुन्दरि (समयाविद्ये)

अघोरकुब्जिके    तारासुन्दरि

वज्रकुब्जिके    रमासुन्दरि

समयकुब्जिके    मायासुन्दरि

घोरकुब्जिके    वाक्सुन्दरि

वीरकुब्जिके

जयकुब्जिके    दिव्यसुन्दरि

सिद्धकुब्जिके    ६४० परासुन्दरि

भोगकुब्जिके    निर्वाणसुन्दरि ५५०

मोक्षकुब्जिके    मोक्षसुन्दरि

कामसुन्दरि    निर्वाणमहात्रिपुरसुन्दरि

सप्तकोटिनिर्वाणसिद्धान्त-सर्वाधिकारस्वरूपिणि महात्रिपुरसुन्दरि

सर्वाधिकारनिर्वाणगुरुपङ्क्तिमहानिर्वाणभैरवपरापररहस्ययोगिनि

चतुर्बीजसहितद्वादशकूटात्मिका-निर्वाण-महात्रिपुरसुन्दरि

बीजद्वयसहित-चतुर्दशकूटात्मिका-निर्वाणमहात्रिपुरसुन्दरि

षोडशकूटात्मिका-निर्वाणमहात्रिपुरसुन्दरि अष्टादशि (चक्रनायिका)

सर्वाम्नायनायिकामहात्रिपुरसुन्दरि

६६० त्रिखण्डामुद्रे

मोक्षसिद्धे

परब्रह्मात्मकचक्राधिष्ठात्री-महात्रिपुरसुन्दरि

परापररहस्योगिनी    राकिनीसहित-सदाशिव

कलाध्वन्    लाकिनीसहित-विष्णो

तत्त्वाध्वन्    काकिनीसहित-ब्रह्मनाथ

वर्णाध्वन्    साकिनीसहित-गणनाथ

भुवनाध्वन्    हाकिनीसहितपरमात्मन्

पदाध्वन्    याकिनीसहितस्वगुरो

मन्त्राध्वन्    श्रीमहात्रिपुरसुन्दरि

तत्वात्मन्    ६७० श्रीमहात्रिपुरसुन्दर

डाकिनीसहित-जोवेश्वर

मोक्षसिद्धे
त्रिखण्डामुद्रे
सर्वदर्शनोत्तीर्णस्वरूपिणि ६८०
सर्वाध्वशोधनचक्रस्वामिनि
परापररहस्ययोगिनि नमस्ते नमस्ते
नमस्ते । (स्वाहा) ।६८४
ॐ श्रीं ह्रीं ऐं ।

समष्टिपूजनम्—

सर्वाम्नायात्मकोर्ध्वाम्नायेशी-भासाचक्राधिष्ठात्री-भासाचक्रनिलया-श्रीललितामहात्रिपुरसुन्दरी-विलीनभासामहाकामेश्वरी-समस्त-श्रीचक्रपीठादिभासान्तपाशुपतस्वरूप-महापाशुपतविद्यातदूर्ध्वं ज्योतिरूर्ध्ववक्त्रशिवादिस्वगुरुपूर्वक-सर्वाम्नायात्मकभासाकूटदेवताश्रीपादुकां पूजयामि तर्पयामि नमस्करोमि ।

— समष्टि-पुष्पाञ्जलिः —

ॐ एं ह्रीं श्रीं समस्त-परापर-रहस्यातिरहस्य-रहस्य-निगर्भ-कुलोत्तीर्ण-सम्प्रदाय-गुप्ततर-गुप्त-मातृका-प्रकटयोगिनी-देवताभ्यो नमः ।

( इति समष्टिपुष्पाञ्जलिं समर्प्य नैवेद्यं च निवेद्य पूर्ववदुत्तरन्यासान् विधाय ध्यानपूर्वकं श्रीमहात्रिपुरसुन्दर्यै पूजां समर्पयेत् ।[1])

॥ श्रीपरदेवतार्पणमस्तु ॥



---

१– इस 'खड्गमाला' के अन्य प्रयोगो के बारे में देखिए—"प्राक्कथन"

विशेष-सूचना—

कतिपय साधक प्रातः, मध्याह्न और सांयकालीन उपासना क्रम की पूर्ति के पश्चात् तुरीयकाल में भी भगवती के श्रीयन्त्र की आवरण-पूजा करते हैं, अतः उनके लिये तुरीया-पूजा में जो विशेष क्रम होता है उसका विधान आगे दिया जा रहा है ।

# तुरीयोपासकानां कृते विशिष्ट-पूजाक्रमः

(अष्टदल-मूलवृत्ते वामाद्याः शक्तयः)

| | | | |
|---|---|---|---|
| | १- वामे | ४- अम्बिके | |
| | २- ज्येष्ठे | ५- इच्छे | |
| | ३- रौद्रि | ३- ज्ञाने | |
| लयक्रमस्य | ७- क्रिये | | सृष्टिक्रमस्य |
| \| | ८- कुब्जिके | १३- खेचरि | \| |
| चतुर्थावरणे | ९- विल्वि | १४- उमे | सप्तमावरणे |
| | १०- चित्रे | १५- विजये | |
| | ११- विषघ्निके | १६- नन्दे | |
| | १२- भूचरि | १७- सुनन्दे | |

(चतुर्दशार-चक्रस्य पार्श्वयोरग्रे बिन्दुमध्ये च चतस्रोऽवस्थाः)

| | | | |
|---|---|---|---|
| लयक्रमस्य | १- (उत्तरे) जाग्रदवस्थादेवि | ३- अग्रतः सुषुप्त्यवस्थादेवि | सृष्टिक्रमस्य |
| पंचमावरणे | २- (दक्षिणे) स्वप्नावस्थादेवि | ४- तुरीयावस्थादेवि | षष्ठावरणे |

(बहिर्दशार-चक्रस्य पार्श्वयोरग्रे (मध्ये च) षड्वाचः शक्तयः)

| | | | |
|---|---|---|---|
| लयक्रमस्य | ॐ लीनावाक्शक्ते | " मध्यमावाक्शक्ते | सृष्टिक्रमस्य |
| षष्ठावरणे | ॐ अपरावाक्शक्ते | " पश्यन्तीवाक्शक्ते | पंचमावरणे |
| | " परावाक्शक्ते | " वैखरीवाक्शक्ते | |

(अन्तर्दशार-चक्रस्य पार्श्वयोरग्रे च पञ्च-कामपूजा)

| | | | |
|---|---|---|---|
| लयक्रमस्य | ॐ काम | " कन्दर्प | सृष्टिक्रमस्य |
| सप्तमावरणे | " मन्मथ | " मकरध्वज | चतुर्थावरणे |
| | | " मीनकेतो | |

(वसुकोण-पार्श्वयोरग्रे च पञ्चबाण-देवताः)

| | | | |
|---|---|---|---|
| लयक्रमस्य | १- ॐ क्षों क्षोभणबाणदेवते | ३- " आं आकर्षणबाणदेवते | सृष्टिक्रमस्य |
| अष्टमावरणे | २- ,, द्रां द्रावणबाणदेवते | ४- " वं वश्यकृद्बाणदेवते | तृतीयावरणे |
| | | ५- " सं सम्मोहनबाणदेवते | |



□स्तुतिपद्यानि—

वालार्कारुणतेजसं त्रिनयनां रक्ताम्वरोल्लासिनीं,
नानालङ्कृतिराजमानवपुषं वोलोडुराट् शेखराम् ।
हस्तैरिक्षु-धनुः-सृणो-सुमकरां पाशं मुद्रां बिभ्रतीं,
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां भजे ॥

Λ Δ Δ Δ

ह्रोङ्कारासनगर्भितानलशिखां सौः क्लीं कलां बिभ्रतीं,
सौवर्णाम्वरधारिणीं वरसुधाधौतां त्रिनेत्रोज्ज्वलाम् ।
वन्दे पुस्तकपाशमङ्कुशधरां स्रग्भूषितामुज्ज्वलां,
त्वां गौरीं त्रिपुरां परात्पर-कलां श्रीचक्रसञ्चारिणीम् ॥

□ □ □ □

आरक्ताभां त्रिनेत्रामरुणिमवसनां रत्नाताटङ्करम्यां,
हस्ताम्भोजैः सपाशाङ्कुशम दनधनुः सायकैर्विस्फुरन्तीम् ।
आपीनोतुङ्गवक्षोरुहविलुठत्तारहारोज्ज्वलाङ्गीं,
ध्यायेदम्भोरुहस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ॥

□ □ □ □

प्रसीद परदेवते मम हृदि प्रभूतं भयं,
विदारय दरिद्रतां दलयं देहि सर्वज्ञताम् ।
निधेहि करुणानिधे चरणपद्मयुग्मं स्वकं,
निवारय जरामृतिं त्रिपुरसुन्दरि श्रीशिवे ॥

□ □ □ □

चिन्तां मोचय सम्पदं वितर मे स्त्री-पुत्र-पौत्रान्वितां,
दारिद्र्यं दलयाशु लम्ब कवितास्फूर्तिं कुरुष्वाम्बिके ।
ज्ञानं देहि रिपूञ्जयं क्षयमिह ध्वान्तं विधेह्याज्ञया,
शोकं नाशय बालशीतकिरणोत्तंसप्रिये ! पाहि माम् ॥

॥ श्रीपरदेवतार्पणमस्तु ॥

दुर्गासप्तशत्यन्तर्गता श्रीविद्यार्णव-सम्मता
श्रीचक्रावरणार्चने नवरात्रपूजाक्रमेण
लयक्रम-समन्विता

# षष्ट्युत्तरत्रिशत-शक्तिनामावली

※

(प्रतिपदायां भूपुरे त्रिपुरादेवी प्रकाशानन्दनाथदिने)

श्रीनित्यायै नमः
जगन्मूर्तये
देव्यै
भगवत्यै
महामायायै
प्रसन्नायै
वरदायै
मुक्तिदायिन्यै
परमायै
हेतुभूतायै १०
सनातन्यै
संसारबन्धहेतवे
सर्वेश्वर्यै
ईश्वर्यै
योगनिद्रायै
हरिनेत्रकृतालयायै
विश्वेश्वर्यै
जगद्धात्र्यै
स्थितिकारिण्यै
संहारकारिण्यै २०

श्रीनिद्रायै नमः
भगवत्यै
अतुलायै
तेजसांनिधये (प्रभवे)
स्वाहायै
स्वधायै
वषट्कारायै
स्वरात्मिकायै
सुधायै
अक्षरायै ३०
त्रिधामात्रात्मिकायै
अर्धमात्रात्मिकायै
स्वरस्वरूपिण्यै
अनुच्चार्यायै
सन्ध्यायै
सावित्र्यै
जनन्यै
परायै
सृष्टिरूपायै
जगद्योन्यै ४०

(द्वितीयायां त्रिवृत्त-चक्रे त्रिपुरेशिनीदेवी विमर्शानन्दनाथदिने)

श्रीस्थितिरूपायै नमः
संहृतिरूपायै
जगन्मयायै
महाविद्यायै
महामायायै
महामेधायै
महास्मृत्यै
महामोहायै
भवत्यै
महादेव्यै ५०
महासुर्यै (महेश्वर्यै)
प्रकृत्यै
सत्त्वादिगुणत्रयविभाविन्यै
कालरात्र्यै
महारात्र्यै
मोहरात्र्यै
दारुणायै
सुरेश्वर्यै
ह्रियै
बुद्ध्यै ६०

श्रीबोधायै नमः
सुलक्षणायै
लज्जायै
पुष्ट्यै
तुष्ट्यै
शान्त्यै
क्षान्त्यै
खड्गिन्यै
शूलिन्यै
घोरायै ७०
गदिन्यै
चक्रिण्यै
शङ्खिन्यै
चापिन्यै
बाणायै
भुशुण्ड्यै
परिघायुधायै
सौम्यायै
सौम्यतरायै
सुन्दर्यै ८०

(तृतीयायां षोडशारचक्रे त्रिपुरेशीदेवता आनन्दानन्दनाथदिने)

श्रीपरायै नमः
परमायै
परमेश्वर्यै
सदात्मिकायै
असदात्मिकायै
सदसदात्मिकायै
अखिलात्मिकायै
नार्यै
शिवायै
सिंहवाहिन्यै ९०
अम्बिकायै

श्रीभद्रकालिकायै नमः
चण्डिकायै
जगन्मात्रे
महिषासुरघातिन्यै
आत्मशक्तये
सर्वानन्दमय्यै
श्रद्धायै
गुणात्मिकायै
सर्वाश्रयायै १००
अव्याकृतायै
" आद्यायै

श्री शब्दात्मिकायै नमः
वार्तायै
आर्तिहन्त्र्यै
मेधायै
दुर्गायै
भवसमुद्रनावे
असङ्गायै
कैटभारातिहृदयैककृतालयायै ११०
गौर्य्यै

श्री सदार्द्रचित्तायै नमः
गीर्वाणवरदायिन्यै
देव्यै
महादेव्यै
शिवायै
भद्रायै
रौद्र्यै
धात्र्यै
ज्योत्स्नायै १२०

(चतुर्थ्याम् अष्टदले त्रिपुरसुन्दरीदेवो ज्ञानानन्दनाथदिने)

श्री-इन्दुरूपिण्यै नमः
सुखायै
कल्याण्यै
ऋद्ध्यै
सिद्ध्यै
कूर्मिकायै
नैर्ऋत्यै
भूभृतां लक्ष्म्यै
शर्वाण्यै
दुर्गायै १३०
दुर्गपारायै
सारायै
सर्वकारिण्यै
क्षान्त्यै
कृत्स्नायै
धूम्रायै
अतिसौम्यायै
अतिरौद्रिण्यै
जगत्प्रतिष्ठायै
कृष्णायै १४०

श्री विष्णुमायायै नमः
चेतनायै
बुद्धिरूपायै
निद्रारूपायै
क्षुधारूपायै
छायारूपायै
शक्तिरूपायै
तृष्णारूपायै
क्षान्तिरूपायै
जातिरूपायै १५०
लज्जारूपायै
शान्तिरूपायै
श्रद्धारूपायै
कान्तिरूपायै
लक्ष्मीरूपायै
वृत्तिरूपायै
धृतिरूपायै
स्मृतिरूपायै
दयारूपायै
तुष्टिरूपायै १६०

(पञ्चम्यां चतुर्दशारचक्रे त्रिपुरवासिनीदेवी सत्यानन्दनाथदिने)

श्रीपुष्टिरूपायै नमः
मातृरूपायै
भ्रान्तिरूपायै
शुभहेतवे
पार्वत्यै
कौशिक्यै
कालिकायै
उग्रचण्डायै
कृष्णायै
हिमाचलकृताश्रयायै १७०
धूम्रलोचनहन्त्र्यै
असिन्यै
पाशिन्यै
विचित्रखट्वाङ्गधरायै
नरमालाविभूषणायै
द्वीपिचर्मपरीधानायै
शुष्कमांसायै
अतिभैरवायै
अतिविस्तारवदनायै
जिह्वाललनभीषणायै १८०

श्रीनिमग्नायै नमः
आरक्तनयनायै
नादापूरितदिङ्मुखायै
भीमाक्ष्यै
भीमरूपायै
चण्डविनाशिन्यै
मुण्डविनाशिन्यै
चामुण्डायै
लोकविख्यातायै
ब्रह्माण्यै १९०
ब्रह्मवादिन्यै
माहेश्वर्यै
वृषारूढायै
त्रिशूलधारिण्यै
वरधारिण्यै
महाबलायै
अहिवलयायै
चन्द्ररेखाविभूषणायै
कौमार्यै
शक्तिहस्तायै २००

(षष्ठ्यां वहिर्दशारचक्रे त्रिपुराश्रीदेवता पूर्णानन्दनाथदिने)

श्रीमयूरवाहनायै नमः
गुहरूपायै
वैष्णव्यै
गरुडोपरिसंस्थितायै
शङ्खहस्तायै
चक्रहस्तायै
गदाहस्तायै
शार्ङ्गहस्तायै
खड्गहस्तायै
वाराह्यै २१०

श्रीनारसिंह्यै नमः
नृसिंहसदृश्यै
घोररवायै
सटाक्षेपक्षिप्तनक्षत्रसंहृत्यै
वज्रहस्तायै
ऐन्द्र्यै
गजराजोपरिस्थितायै
सहस्रनयनायै
शक्रहस्तायै
भीषणायै २२०

श्रीशक्तये नमः
अत्युग्रायै
शिवाशतनिनादिन्यै
अपराजितायै
शिवदूत्यै
कात्यायन्यै
रक्तबीजनाशिन्यै
चन्द्रघण्टिकायै
अष्टादशभुजायै
उग्रायै २३०
निशुम्भासुरघातिन्यै
शुम्भहन्त्र्यै
प्रपन्नार्तिहरायै
विश्वेश्वर्यै
आधारभूतायै
महीरूपायै
अपांस्वरूपायै
आप्यायिन्यै
अलङ्घ्यवीर्यायै
अनन्तवीर्यायै २४०

(सप्तम्याम् अन्तर्दशारचक्रे त्रिपुरमालिनीदेवी स्वभावानन्दनाथदिने).

श्रीबीजस्वरूपिण्यै नमः
सम्मोहिन्यै
विद्यायै
स्वर्गप्रदायिन्यै
मुक्तिप्रदायिन्यै
अशेषजनहृत्संस्थायै
नारायण्यै
शिवायै
कलाकाष्ठादिरूपायै
परिणामप्रदायिन्यै २५०
सर्वमङ्गलमाङ्गल्यायै
शिवायै
सर्वार्थसाधिकायै
शरण्यायै
त्र्यम्बकायै
गौर्यै
सृष्ट्यात्मिकायै
स्थित्यात्मिकायै
लयात्मिकायै
शक्त्यै २६०
श्रीसनातन्यै नमः
गुणाश्रयायै
गुणमयायै
नारायणस्वरूपिण्यै
शरणागतपरित्राणपरायणायै
दीनपरित्राणपरायणायै
आर्तपरित्राणपरायणायै
सर्वस्यार्तिहर्यै
देव्यै
विष्णुरूपायै २७०
परात्परायै
हंसयुक्तविमानस्थायै
ब्रह्माणीरूपधारिण्यै
कौशाम्भोधारिण्यै
क्षुरिकाधारिण्यै
शूलधारिण्यै
चन्द्रधारिण्यै
अहिधारिण्यै
वरधारिण्यै
महावृषभसंरूढायै २८०

(अष्टम्याम् अष्टारचक्रे त्रिपुरासिद्धादेवी प्रतिभानन्दनाथदिने)

श्रीमाहेश्वर्यै नमः
त्रैलोक्यत्राणसहितायै
किरीटवरधारिण्यै
वृत्रप्राणहरायै
शिवदूतीस्वरूपिण्यै
हृतदैत्यायै
महासत्त्वायै
घोररूपायै
महारवायै
दंष्ट्राकरालवदनायै २९०
शिरोमालाविभूषणायै
चामुण्डायै
मुण्डमथन्यै
लक्ष्म्यै
लज्जायै
महाविद्यायै
श्रद्धायै
पुष्ट्यै
सदाध्रुवायै
महारात्र्यै ३००

श्रीमहाविद्यायै
महामेधायै नमः
सरस्वत्यै
वरायै
भीतिदायै
तामस्यै
नियतेशायै
सर्वतः पाण्यन्तायै
सर्वतः पादान्तायै
सर्वतोऽक्ष्यन्तायै ३१०
सर्वतः शिरोन्तायै
सर्वतो मुखान्तायै
सर्वतः श्रवणान्तायै
सर्वतो घ्राणान्तायै
सर्वस्वरूपिण्यै
सर्वेशायै
सर्वरूपायै
सर्वशक्तिसमन्वितायै
समस्तरोगहन्त्र्यै
समस्ताभीष्टदायिन्यै ३२०

(नवम्यां त्रिकोणचक्रे त्रिपुराम्बादेवी सुभगानन्दनाथदिने)

श्रीविश्वात्मिकायै नमः
विश्वेशवन्द्यायै
पापहारिण्यै
उत्पातपाकजनितोपसर्गचयनाशिन्यै
विश्वार्तिहारिण्यै
त्रैलोक्यवरदायिन्यै
नन्दगोपगृहेजातायै
यशोदागर्भसम्भवायै
विन्ध्याद्रिवासिन्यै
रौद्ररूपिण्यै ३३०

श्रीरक्तदन्तिकायै नमः
दाडिमीकुसुमप्रख्यायै
अयोनिजायै
शतलोचनायै
भीमायै
शाकंम्भर्यै
दुर्गायै
दानवेन्द्रविनाशिन्यै
महाकाल्यायै
महाकाल्यै ३४०

श्रोमहामायै नमः
अजायै
लक्ष्मीप्रदायै
वृद्धिप्रदायै
नित्यायै
पुत्रपौत्रवर्धिन्यै
शैलपुत्र्यै
ब्रह्मचारिण्यै
चन्द्रघण्टायै
विशालाक्ष्यै ३५०

श्रीकुष्माण्डायै नमः
वेदमातृकायै
स्कन्दमात्रे
गणेश्यै
विरूपाक्ष्यै
अम्विकायै
महागौर्यै
महावीर्यायै
महाबलायै
महापराक्रमायै नमः ३६०

( दशम्यां बिन्दौ समाष्टिपूजेति । )

※ देवीनामावली के सम्बन्ध में—

जो साधक प्रतिदिन एक-आवरण (४० नाम) की पूजा करते हैं वे विजय दशमी को विन्दु में समस्त ३६० नामों से अर्चन करें ।

प्रायः इस अर्चना के तीन प्रकार प्रचलित हैं—

१– दैनिक आवरणार्चन के पश्चात् जहां सहस्रनामार्चन किया जाता है। वहीं इन ३६० नामों से भी अर्चना की जातो है ।

२– प्रत्येक आवरणार्चन की पूर्ति के पश्चात् जहां "एता······चक्र·········योगिन्यः सम्पूजिताः" इत्यादि समर्पण से पूर्व ४०-४० नामों से अर्चना करते है तथा नौ आवरणों की पूर्ति के पश्चात् पुनः सम्पूर्ण आर्वर्तन द्वारा विन्दु में अर्चना होती है ।

३– जो साधक केवल नौ आवरणों वाली पूजा करते हैं, वे अन्तिम आवर्त्तन नहीं करते हैं ।

'अधिकस्याधिकं फलम्' के अनुसार प्रत्येक चक्र की देवी का ध्यान और उनके मन्त्र श्रीचक्रपूजाक्रमवत् ही ग्राह्य हैं । इस दृष्टि से ध्यान और मन्त्र के साथ स्वतन्त्र केवल इन्हीं नामों से भी पूजा हो सकती है। यह पूजा शारद नवरात्र में अथवा नाथवासरों में पुष्पों द्वारा करने का भी निर्देश है ।

प्रत्येक चक्र की देवी का ध्यान वहां इस प्रकार बताया गया है—

१. भूपुरे— शुद्धस्फटिकवर्णाभां त्रिनेत्रां च चतुर्भुजाम् ।
पुस्तकञ्चाक्षसूत्रं च पद्मद्वयकरां शुभाम् ॥१॥
अणिमादि-सुसंयुक्तां सौख्यदां सिद्धिदायिनीम् ।
त्रैलोक्यमोहने वन्दे त्रिपुरां चतुरस्रके ॥ २॥

२. त्रिवृत्ते— रक्तवर्णां त्रिनेत्रां च पुस्तकाक्ष-वराभयैः ।
शोभितां हस्तकमलां महावृत्तत्रयाधिपाम् ॥३॥
मातृकायोगिनीयुक्तां मुद्रायुधविराजिताम् ।
त्रैवर्ग्यसाधके चक्रे वन्दे श्रीत्रिपुरेशिनीम् ॥४॥

३. षोडशदले— शुभ्रां चतुर्भुजां वन्दे पाशाङ्कुशवराभयैः ।
भूषितां षोडशाराब्जे त्रिपुरेशीं सुरेश्वरीम् ॥५॥

४. अष्टदले— रक्तवर्णां चतुर्हस्तां पुस्तकाक्ष-वराभयैः ।
विभूषितां सर्वसंक्षोभणाष्टदलचक्रके ॥६॥
अनङ्गकुसुमाद्यष्ट-देवीभिः परिवारिताम् ।
त्रिनेत्रां सस्मितां वन्दे देवीं त्रिपुरसुन्दरीम् ॥७॥

५- चतुर्दशारे— रक्तवर्णां चतुर्हस्तां पुस्तकाक्षवराभयैः ।
भूषितां सर्वसौभाग्यदायके मनुकोणके ॥८॥
सर्वसंक्षोभिणीशक्तिप्रभृतिप्रावृतां पराम् ।
मातरं स्थिरया भक्त्या वन्दे त्रिपुरवासिनीम् ॥९॥

६. बहिर्दशारे— सहस्रार्कसमाभासां पुस्तकाक्षवराभयैः ।
शोभितां हस्तकमलां दशारे बाह्यचक्रके ॥१०॥
सर्वसिद्धिप्रदाद्याभिर्देवीभिः परिवारिताम् ।
सर्वार्थसाधके चक्रे वन्दे श्रीत्रिपुराश्रियम् ॥११॥

७. अन्तर्दशारे— रक्तवर्णां त्रिनयनां पाशाङ्कुश-कपालकम् ।
वराभयाक्षमालां च करेषु दधतीं पराम् ॥१२॥
सर्वज्ञादि-समायुक्तां देवीं त्रिपुरमालिनीम् ।
चक्रे ह्यन्तर्दशाराख्ये सर्वरक्षाकरे भजे ॥१३॥

८. अष्टारे— शुक्लवर्णां त्रिनयनां पाशाङ्कुश-कपालिनीम् ।
वाग्देवताऽष्टकयुतां सर्वालङ्कार-भूषिताम् ॥१४॥
मातरं त्रिपुरासिद्धां सायुधां च सशक्तिकाम् ।
सर्वरोगहरेऽष्टारे चक्रे चक्रेश्वरीं भजे ॥१५॥

९. त्रिकोणे— रक्ताम्बरां मुण्डमालां पुस्तकाक्षवराभयैः ।
शोभितां त्र्यस्रमध्यस्थां शक्तित्रय-समन्विताम् ॥१६॥
सर्वसिद्धिप्रदे चक्रे सर्वसिद्धिप्रदायिकाम् ।
सर्वालङ्कारसंयुक्तां वन्दे श्रीत्रिपुराम्बिकाम् ॥१७॥

१० बिन्दौ— सूर्येन्द्वग्निमयैकपीठनिलयां बालार्कबिम्बारुणां,
त्र्यक्षां चन्द्रकलावतंसमुकुटां पीनस्तनीं सुन्दरीम् ।
पाशं चाङ्कुशमिक्षुचापविधृतां पुष्पेषुहस्तां परां,
नानाभूषणभूषितातिसुकुमाराङ्गीं भजे बैन्दवे ॥१८॥

# श्रीमहात्रिपुरसुन्दरी-त्रिशती-नाममाला[1]

ॐ ऐं ह्रीं श्रीं
कामेश्यै नमः
कामदायै
काम्यायै
कमनीयायै
कुलेश्वर्यै
कामाख्यायै
कञ्जपत्रास्यायै
कामदेवप्रपूजितायै
कालनिर्नाशिन्यै
काल्यै १०
कदम्बवनचारिण्यै
कालरात्रीस्वरूपायै
कान्तारवनवासिन्यै
कामिन्यै
कामिकायै
कान्तायै
कालेश्यै
कुलपूजितायै
कादम्बरीप्रियायै
कुल्लायै २०
कुरुकुल्लायै
कपालिन्यै
कपर्दिन्यै
कामकलायै
कलायै (कलासायै)
कलात्मिकायै
काम्बोजायै
कालदोषघ्न्यै
कुलमार्गविवर्धिन्यै
क ५ स्वरूपायै ३०
कामराजात्मिकायै
कलायै
कम्बुकण्ठ्यै
कुलीनायै
कुलीनाचारतत्परायै
कादिवर्णायै
कहायै
कक्षायै
कक्षदेशनिवासिन्यै
कूर्मरूपायै ४०
कूर्मसंस्थायै
कूर्मपृष्ठविहारिण्यै
कमलाक्ष्यै
कुलश्रेष्ठायै

---

१- यह त्रिशतीनाममाला श्रीदेवी के आग्रह से भगवान् शिव ने व्यक्त की है। प्रसंगवश वहाँ बतलाया गया है कि महर्षि-अगस्त्य ने देवी से प्रार्थना की थी कि—कलियुग में लोग आपकी अर्चना, मन्त्रजप आदि करने में अशक्त हो जाएँगे,' तब उन्हें सरलता से सिद्धि कैसे मिलेगी ? इसके लिये आप रहस्य बताएँ तब भगवती ने उनकी भक्ति से प्रसन्न होकर यह त्रिशती प्रदान की । इसका विधान भी वहां दिखलाया गया है जिसका सार यह है कि— पूजा के पश्चात् विन्दुचक्र में श्रीदेवी की पञ्चोपचार पूजा करके इसके द्वारा पुष्पाक्षतार्चन करे अथवा पाठ करे। मूल श्लोकों में जो 'नित्यं', सदा, च आदि अव्यय आये हैं उनको नामों से मुक्त रखा है।

कौलिन्यै
कुलतर्पितायै
कौसुम्भवर्णायै
कौसुम्भायै
कौसुम्भाम्बरधारिण्यै
कवीनामग्रणिये ५०
काव्यायै
कवित्वफलदायिन्यै
काम्यरूपायै
काम्यफलायै
काम्यसिद्धिकर्यै
कामेश्वरप्रियायै
काम्यै
कामरूपनिवासिन्यै
कालबीजस्वरूपायै
कालसङ्कर्षिण्यै ६०
कुजायै
कुन्दपुष्पप्रियायै
कुन्दायै
कुन्दमाल्यविभूषितायै
कर्णिकारसुशोभाढ्यायै
कर्णिकारप्रसूतिकृते
कर्णिकामध्यसंस्थायै
कर्णिकारप्रपूजितायै
कहस्वरूपायै
अकहस्वरूपायै ७०
कहमन्त्रपरायणायै
कादिमन्त्रस्वरूपायै
कादिसिद्धान्तकारिण्यै
कएईल ह्रीं स्वरूपायै
हसकल ह्रीं स्वरूपिण्यै
ऐं क ५ स्वरूपायै
ह्रीं ह ४ ह्रींशरीरिण्यै
ऐं आं ह्रीं सौः कलह्रीं शरीरिण्यै
ऐं आं सौः कलह्रीं शरीरिण्यै
ऐं ऐं ईं कलह्रींरूपायै ८०
क्लीं ह्रीं ऐं कलह्रीं रूपायै
ऐं क्लीं सौः कलह्रीं रूपायै
हसौः ऐं कलह्रीं रूपायै
दक्षिणाम्नायरूपायै
पश्चिमाम्नायरूपायै
शाम्भव्यै
चतुष्कूटायै
शाङ्कर्यै
षट्कूटायै
भैरव्यै ९०
क ५ ह ५ हकहल ह्रीं कएईलह्रीं कह-
कह सलह्रीं पञ्चकूटात्मिकाविद्यायै
क ५ ह्रीं कलह्रीं नादबिन्दुस्वरूपिण्यै
कूटस्थायै
कूटमन्त्रस्थायै
उपकूटस्वरूपिण्यै
भावकूटस्थितायै
कामकूटनिवासिन्यै
यन्त्रकूटमयीदेव्यै
मन्त्रकूटविधायिन्यै
पञ्चकूटमहामन्त्रपालिन्यै १००
कूटरूपिण्यै
कौलिकाचारसन्तुष्टायै
कौलिकानन्ददायिन्यै
कुलमन्त्रायै
कुलद्रव्यायै
कुलीनाचारगोपिन्यै
काल्यै
कामेश्वर्यै
नित्यायै

कुल्लुकायै ११०
क्लींस्वरूपिण्यै
क ५ ह ६ स४ स्वरूपिण्यै
हसक्षमलवरयूं हक्षमलवरयीं स्वरूपिण्यै
उन्मनीबीजसंयुक्तायै
बीजसर्वाङ्गसुन्दर्यै
ऐं क्लीं सौःत्र्यक्षरीविद्यायै
ह्रीं क्लीं सौः
श्रीरमायै
परायै
हसौः हस्क्लीं हसौः श्रीं हसौः विद्यायै
डामरेश्वर्यै
हसौः क्लीं हसौः श्रीं क्लीं हसौः श्रीं-
विद्यायै
कवर्गायै
कुलिशान्तायै
कुमार्यै
कपटेश्वर्यै
काहंसिकभयत्राणायै
भानुमण्डलचारिण्यै
भानव्यै
भानुतेजस्विन्यै १३०
भीमायै
भानुप्रपूजितायै
भालचक्रस्थितायै
भालरेखाविनाशिन्यै
श्रीविद्याषोडशाक्षर्यै
विन्दुचक्रस्वरूपायै
षोडशाधारसंस्थितायै
षोडशारप्रतिष्ठायै
षोडशस्वरभूषितायै
षोडशीमन्त्ररूपायै १४०
षोडशाक्षररूपिण्यै

शृङ्गारषोडशाराध्यायै
कलायै
षोडशरूपिण्यै
मन्त्रदेहायै
मन्त्रपदायै
मन्त्रशीर्षायै
मन्त्रहृदे
मन्त्रमालायै
महामन्त्रायै १५०
मन्त्रदेहस्वरूपिण्यै
ऐं शीर्षायै
क्लीं मस्तकायै
सौः ग्रीवायै
ह्रीं बाहुकायै
श्रींस्तनायै
कूटसर्वाङ्ग्यै
ओङ्कारप्राणरूपिण्यै
ह्रौं रूपायै
ह्सौः रूपायै १६०
हूंहूंकारप्रणादिन्यै
हसक्षमलरूपायै
स्हक्षमलरूपिण्यै
कलह्रीं मन्त्ररूपायै
सकलह्रीं स्वरूपिण्यै
सुधामसुद्रमध्यस्थायै
सुधापानपरायणायै
सुधाक्षरमहामन्त्रायै
सुधाधाराप्रवर्द्धिन्यै
पद्मायै १७०
पद्मावत्यै
पद्मधारिण्यै
पद्मचारिण्यै
षट्कोटिमन्त्ररूपायै

नवत्यर्बुदसिद्धिदायै
पाशधरायै
अङ्कुशधरायै
धन्यायै
धरण्यै
धारिण्यै १८०
धरायै
धर्मधात्र्यै
धुरीणायै
धर्मश्रियै
धर्मसाक्षिण्यै
स्वधर्मपालिन्यै
धर्मायै
धर्मनिन्दकनाशिन्यै
त्वरितायै
अन्नपूर्णायै १९०
पूर्णायै
महिषमर्दिन्यै
परस्यै
परमात्मने
परमायै
परमज्योतीरूपिण्यै
परोपकारिण्यै
पुण्यायै
अपुण्यविनाशिन्यै
पापविनाशिन्यै २००
जालन्धर्यै
जलेश्यैं
जलतत्त्वस्वरूपिण्यै
जयदायै
ज्वालिन्यै
ज्वालायै
जालन्धरनिवासिन्यै
चन्द्रधरायै
चन्द्रचक्रिण्यै
चान्द्र्यै २१०
चक्रेन्द्रपूजितायै
चन्द्रमण्डलमध्यस्थायै
शरच्चन्द्रसमप्रभायै
कोटिचन्द्रसमाभासायै
रात्रिचन्द्रसमाननायै
सहस्रचन्द्रशीताङ्ग्यै
वालचन्द्रकिरीटिन्यै
योनिरूपस्वरूपायै
यौवनोन्मत्तरूपिण्यै
वृद्धायै २२०
बालायै
युवत्यै
युवतीमण्डलप्रियायै
भुवनेश्यै
भयत्रात्र्यै
भगेश्यै
भगपूजितायै
भैरव्यै
भूतिन्यै
भव्यायै २३०
भैरवानन्दवर्धिन्यै
सम्पत्प्रदाभैरव्यै
षट्कूटाभैरव्यै
त्रिपुराभैरव्यै
भीमाभैरव्यै
कौलेशभैरव्यै
आनन्दभैरव्यै
मायाभैरव्यै
कुलभैरव्यै
श्रीबालाभैरव्यै २४०
भीमाभैरव्यै

ज्ञानभैरव्यै
कौलेशीभैरव्यै
छिन्नाभैरव्यै
श्रीमहाकालभैरव्यै
संहारभैरव्यै
गुह्याभैरव्यै
कौलिकानन्दभैरव्यै
राजराजेश्वर्यै
राज्यै २५०
षट्चक्रकुलनायिकायै
षट्चक्रभेदिन्यै
मेधायै
सहस्रारनिवासिन्यै
श्रीचक्रमध्यसंस्थायै
श्रीचक्रक्रमपूजितायै
संहारक्रमपूज्यायै
सृष्टिक्रमप्रपूजितायै
सुन्दर्यै
सुन्दराङ्ग्यै २६०
महात्रिपुरसुन्दर्यै
श्रीमहासुन्दर्यै
कालसुन्दर्यै
शिवसुन्दर्यै
मन्दारकुसुमप्रीतायै
मन्दराचलवासिन्यै
मदिरायै
मदिराक्ष्यै
मदिरानन्दकारिण्यै
मदनोन्मत्तरूपायै २७०
मदनान्तकवल्लभायै
रतिरूपायै
रतानन्दायै
रतिकामप्रदायिन्यै
रतिपुष्पप्रियायै
रम्यायै
रमण्यै
रामण्यै
रत्यै
रक्तवर्णायै २८०
रक्ताक्ष्यै
रक्तपानपरायणायै
रक्तपुष्पप्रियायै
देव्यै
पायिन्यै
रक्ततर्पितायै
कुमार्यै
चर्चिकायै
चण्ड्यै
चण्डासुरविनाशिन्यै २९०
चण्डाट्टहासिन्यै
चण्डायै
चामुण्डायै
चण्डनायिकायै
पञ्चम्यै
मन्त्रवर्णाढ्यायै
पञ्चमाचारपूजितायै
पञ्चवर्षस्थितायै
पञ्चस्वर्चिकायै
पञ्चचर्चिकायै नमो नमः । ३००

इति सम्पूज्य पूर्ववद् न्यासादिकं विधाय श्रीदेव्यै समर्पयेत् ।
क्षमाप्रार्थनां च कुर्यात् । श्रीप· देवतार्पणमस्तु ।।

# श्रीमहात्रिपुरसुन्दरी त्रिशती-नाममाला
## के सम्बन्ध में
# विशेष ज्ञातव्य

नित्य अथवा नैमित्तिक अर्चना में विभिन्न प्रकार की नामावलियों से अर्चना की जाती है। नामावलियां आगमों-तन्त्रों में अनेक रूपों में उपलब्ध हैं उनमें यह नाममाल भी अत्यन्त सिद्धमन्त्रगर्भ है।

इस नामावली के अन्त में भगवान् शिव ने कहा है कि—

इति ते कथितं देवि ! त्रिशती-स्तोत्रमुत्तमम् ।
यस्य संस्मरणादेव त्रैलोक्य-विजयी भवेत् ॥ ७५॥ इत्यादि ।

इसके अनुसार यह नामावली अत्यन्त महत्त्वपूर्ण है। 'श्रीललितात्रिशती-स्तोत्र" की जिस प्रकार यह प्रसिद्धि है कि अन्य न्यास, पूजा, जपादि कर्म यदि यथासमय सम्पन्न नहीं किये जा सकें तो इसका पाठ करने से उनकी पूर्ति हो जाती है। और इसी लिये उसका अपरनाम "सर्वसम्पूर्तिकर-स्तव" भी कहा गया है। उसी प्रकार महाषोडशी के उपासकों के लिये यह त्रिशती-नाममाला 'सर्वसम्पूर्तिकर' मानी गई है।

इसके माहात्म्य में तो यहां तक कहा गया है कि—

प्रातः काले च सन्ध्यायां निशायां भक्तिसंयुतः ।
यः पठेत् त्रिशतीस्तोत्रं स एव श्रीसदाशिवः ॥ ७६॥

यह नाममाला 'श्रीसुन्दरीस्तव' नाम से भी अभिहित है। जैसे अन्य नामावलियों के पुरश्चरण तथा विभिन्न काम्य-प्रयोग होते हैं उसी प्रकार उनका भी उक्त माहात्म्यरूप पुष्पिका में समावेश हुआ है। यही कारण है कि इसका यहाँ समावेश किया गया है।



### अथ श्रीयन्त्रे लक्ष्मीपूजन-विधानाय

# चतुरशीत्युत्तरशत-महालक्ष्मी-नामावली

ध्यानम्— नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।
शङ्खचक्रगदा हस्ते महालक्ष्मि नमोऽस्तु ते ॥

ॐ ह्रीं श्रीं सकल ह्रींरूपिणीं श्रीशक्तिपादुकां पूजयामि ।[1]

| | | | | | |
|---|---|---|---|---|---|
| हारनूपुरसंयुक्तायै | नमः | | हिरण्यवर्णायै नमः | ,, | २० |
| कमलद्वयधारिण्यै | ,, | | हरिण्यै | ,, | |
| लक्ष्म्यै | ,, | | सुवर्णललितस्रजायै | ,, | |
| परशिवमय्यै | ,, | | समस्तसम्पत्सुखदायै | ,, | |
| शुद्धजाम्बूनदप्रभायै | ,, | | अखिलसौभाग्यदायिन्यै | ,, | |
| तेजोरूपायै | ,, | | समस्तकल्याणकर्यै | ,, | |
| कमलवसत्यै | ,, | | ज्ञानदायै | ,, | |
| विश्वमोहिन्यै | ,, | | हरिप्रियायै | ,, | |
| सर्वभूषोज्ज्वलायै | ,, | | विज्ञानसम्पत्सुखदायै | ,, | |
| बीजापूरधरायै | ,, | १० | अश्वपूर्णायै | ,, | |
| आद्याशक्तये | ,, | | हिरण्मय्यै | ,, | ३० |
| सकलजनन्यै | ,, | | विचित्रवाग्भूतिकर्यै | ,, | |
| कलशधारिण्यै | ,, | | रथमध्यायै | ,, | |
| विष्णुवामाङ्गसंस्थायै | ,, | | मनोहरायै | ,, | |
| कमलालयायै | ,, | | हस्तिनादप्रमोदायै | ,, | |
| श्रीमत्सौभाग्यजनन्यै | ,, | | अनन्तसौभाग्यदायिन्यै | ,, | |
| भार्गव्यै | ,, | | सर्वभूतान्तरस्थायै | ,, | |
| सनातन्यै | ,, | | स्वर्णप्राकारमध्यगायै | ,, | |
| सर्वकामफलावाप्तिसाधनसुखावहायै | ,, | | समस्तभूतेश्वर्यै | ,, | |

---

१- यह विधान 'श्रीविद्यार्णव' में वर्णित है। १८४ नामों की इस माला में लक्ष्मी के सभी महत्त्वपूर्ण नामों का समावेश हुआ है। श्रीसूक्त की ऋचाओं में जो नाम आते हैं, वे भी इस नामावली में आये हैं।

यन्त्रराज की पूजा कर लेने के पश्चात् अक्षत से, पुष्पों से अथवा लक्ष्मी को प्रिय लगनेवाली वस्तुओं —बिल्वफल, आंवला, दाख, कमलगट्टे और तालमखाने से भी यह पूजा की जा सकती है। इससे लक्ष्मी-प्राप्ति होती है।

विश्वरूपायै नमः
प्रभामय्यै " ४०
दारिद्र्यदुःखौघतमोपहन्त्र्यै "
पद्मिन्यै "
दीनार्तिविच्छेददक्षायै "
कृपाकलितलोचनायै "
प्रणतस्वान्तशोकघ्न्यै "
शरणागतरक्षणायै "
शान्त्यै "
कान्त्यै "
पद्मसंस्थायै "
कमनीयगुणाश्रयायै " ५०
क्षान्त्यै "
दान्त्यै "
दुरितक्षयकारिण्यै "
शशिशेखरसंस्थायै "
धनधान्यसमृद्धिदायै "
शक्त्यै "
रक्त्यै "
नित्यपुष्टायै "
रजनीकरसोदरायै "
करीषिण्यै " ६०
भक्त्यै "
भवसागरतारिण्यै "
मत्यै "
सिद्ध्यै "
धृत्यै "
मधुसूदनवल्लभायै "
पुष्ट्यै "
हिरण्यमालायै "
शुभलक्षणलक्षितायै "
अतिदुर्गतिहन्त्र्यै " ७०

वरसद्गतिदायिन्यै नमः
दिविदेवगणाराध्यायै "
भुवनार्तिविनाशिन्यै "
आर्द्रायै "
पुष्करिणी-पुष्ट्यै "
धरणीधरवल्लभायै "
दारिद्र्यदुःखहन्त्र्यै "
भयविध्वंसिन्यै "
श्रीविष्णुवक्षःस्थलगायै "
अशेषसुविभूतिदायै " ८०
लक्षणालक्षिताङ्ग्यै "
पद्मायै "
पद्मासनार्चितायै "
विद्यासम्पत्कर्यै "
देवसङ्घाभिपूजितायै "
भद्रायै "
भाग्यरूपायै "
नित्यायै "
निर्मलबुद्धिदायै "
सत्यायै " ९०
सर्वभूतसंस्थायै "
रत्नगर्भान्तरस्थितायै "
रम्यायै "
शुद्धायै "
कान्तायै "
कान्तिमद्भासिताङ्ग्यै "
सर्वसौख्यप्रदादेव्यै "
भक्तौघाभयदायिन्यै "
श्वेतद्वीपकृतावासायै "
जगन्मात्रे " १००
जगन्मय्यै "
रत्नगर्भस्थितायै "

सौम्यायै नमः
क्षीराम्बुधिकृतालयायै "
प्रसन्नहृदयायै "
परिपूर्णायै "
हिरण्मय्यै "
वसुन्धरायै "
श्रीधरायै "
वसुदोग्ध्र्यै " ११०
कृपामय्यै "
विष्णुप्रियायै "
रत्नगर्भायै "
समस्तफलदायै "
रसातलगतायै "
सुव्रतायै "
हरिप्रियायै "
धरणीगर्भसंस्थायै "
समुन्नतमुख्यै "
समस्तपुरसंस्थायै " १२०
परिपूर्णमनोरथायै "
करुणारसनिःष्यन्दनेत्रद्वयविलासिन्यै "
सर्वराजगृहावासायै "
महालक्ष्म्यै "
गुणान्वितायै "
वैकुण्ठनगरस्थायै "
क्षीरसागरकन्यकायै "
योगिहृत्पद्मसंस्थायै "
कल्पवल्ल्यै "
दयावत्यै " १३०
भक्तचिन्तामण्यै "
आदिमायायै "
इन्दिरायै "
रमायै

निराकारायै नमः
साकारायै "
ब्रह्माण्डचयधारिण्यै "
एकनाथायै "
आद्यलक्ष्म्यै "
अज्ञानहन्त्र्यै " १४०
गुणातिगायै "
प्रज्ञानलोचनायै "
अशेषवाग्जाड्यमलहारिण्यै "
सुस्पष्टवाक्प्रदायै "
सर्वसम्पद्विराजितायै "
प्रभालावण्यसुभगायै "
दोग्ध्र्यै "
स्वर्णप्रदायै "
समस्तविघ्नौघहन्त्र्यै "
भोगदायै " १५०
विचक्षणायै "
देवाधिनाथवन्द्यायै "
दीनपोषणतत्परायै "
माङ्गल्यबीजमहिम्ने "
निधिरूपिण्यै "
अनन्तगायै "
आद्यायै "
आदिलक्ष्म्यै "
महासिद्धलक्ष्म्यै "
राजलक्ष्म्यै " १६०
दिव्यलक्ष्म्यै "
सुश्रियै "
मङ्गलदेवतायै "
भक्तिदायै "
भुक्तिदायै "
मुक्तिदायै "

| | | | | | |
|---|---|---|---|---|---|
| सदगतिप्रदायै (सङ्गति?) | नमः | | गोदाय्यै | नमः | |
| कोर्तिदायै | ,, | | धनदाय्यै | ,, | |
| धनदायै | ,, | | महाधनायै | ,, | |
| पुत्रपौत्रविवर्धिन्यै | ,, | १७० | चन्द्रसूर्याग्निसर्वाभायै | ,, | |
| पद्माननायै | ,, | | जातवेदास्त्रसंस्थितायै | ,, | १८० |
| पद्मोर्वे | ,, | | दिग्गजेन्द्रसमाराध्यायै | ,, | |
| पद्माक्ष्यै | ,, | | दिव्यभूषणभूषितायै | ,, | |
| पद्मसम्भवायै | ,, | | सर्वसम्पत्प्रदायै | ,, | |
| अश्वदाय्यै | ,, | | सर्वार्थसाधिन्यै | नमो नमः | १८४ |

## महालक्ष्मी-नामावली के सम्बन्ध में ज्ञातव्य

यह नामावली भगवान् शिव के द्वारा कथित है। इसके आरम्भ में कहा गया है कि-

शीघ्रसम्पत्समृद्ध्यर्थं भार्गवेण कृता पुरा ।
श्रीमत्त्रिपुरसुन्दर्याः सा पूजा कथ्यते मया ।। ३ ।।
यथाऽतिमन्दभाग्योऽपि कुबेरसदृशो भुवि ।
जायते नात्र सन्देहस्तां पूजां शृणु वल्लभे ।। ४ ।।

"शीघ्रसम्पत्ति की प्राप्ति के लिए पहले भार्गव-श्रीपरशुराम ने जिस पूजा का आश्रय लिया था, उस श्रीत्रिपुसुन्दरी का पूजा का मैं वर्णन करता हूं। जिससे मन्दभागी मनुष्य भी पृथ्वी पर निःसन्देह कुवेर के समान वन जाता है, उस पूजा को हे देवी ! तुम सुनो' ।

और इसके पश्चात् कहा है कि—

चक्रपूजां विधायादौ नैमित्तिकमथाचरेत् ।
तत्तदावरणस्थानेष्वियं पूजा विधीयते ।। ५ ।। इति ।

यहां आवरणस्थानों पर की जानेवाली पूजा के साथ इसका प्रयोग किस प्रकार होगा, यह ज्ञात नहीं है, अतः इसका स्पष्टीकरण विशेष रूप से गुरु-कृपा से प्राप्त करें। यदि किसी साधक को पूरा प्रयोग ज्ञात हो तो मुझे भी वताने की कृपा करें जिससे अग्रिम संस्करण में स्पष्ट किया जा सके।

इस नामावली के अन्त में— — कहा गया है कि

एताश्च शक्तयो देव्याः पूजनीयाः प्रयत्नतः ।
सर्वसम्पत्समृद्धिः स्यादचिरेण न संशयः ।। ४० ।।
सर्वदा पूजयेद् देवीं कृत्वा चक्रसमर्चनम् ।
तस्य गेहे स्थिरा लक्ष्मीः पुत्रपौत्रानुगामिनी ।। ४१ ।।
शक्तयः शतङ्ख्याताश्चाशीतिश्चतुरुत्तरम् ।



श्री 'गर्भकुलार्णव -रहस्यजीवतन्त्रोक्ता

# श्रीदेवीवैभवाश्चर्याष्टोत्तरशतदिव्यनामावली

ॐ ऐं ह्रीं श्रीं
परमानन्दलहर्यै नमः
परचैतन्यदीपितायै
स्वयम्प्रकाशकिरणायै
नित्यवैभवशालिन्यै
विशुद्धकेवलाखण्डसत्यकालात्मरूपिण्यै
आदिमध्यान्तरहितायै
महामायाविलासिन्यै
गुणत्रयपरिच्छेत्र्यै
सर्वतत्त्वप्रकाशिन्यै
स्त्रीपुंसभावरसिकायै १०
जगत्सर्गादिलम्पटायै
अशेषनामरूपादि-भेदच्छेदरविप्रभायै
अनादिवासनारूपायै
वासनोद्यत्प्रपञ्चिकायै
प्रपञ्चोपशमप्रौढायै
चराचरजगन्मय्यै
समस्तजगदाधारायै
सर्वसञ्जीवनोत्सुकायै
भक्तचेतोमयानन्तस्वार्थवैभव-
विभ्रमायै
सर्वाकर्षणवश्यादिसर्वकर्मधुरन्धरायै २०
विज्ञानपरमानन्दविद्यायै
सन्तानसिद्धिदायै
आयुरारोग्यसौभाग्यबलश्रीकीर्ति-
भाग्यदायै
धनधान्यवस्त्रभूषालेपनमाल्यदायै
गृहग्राममहाराज्यसाम्राज्य-सुखदायिन्यै
सप्तासकलसम्पूर्णसार्वभौमफलप्रदायै
ब्रह्मविष्णुशिवेन्द्रादिपदविश्राणनक्षमायै
भुक्तिमुक्तिमहाभक्तिविरक्त्यद्वैतदायिन्यै
निग्रहानुग्रहाध्यक्षायै
ज्ञाननिर्णैतदायिन्यै ३०
परकायप्रवेशा-दियोगसिद्धिप्रदायिन्यै
शिष्टसञ्जीवनप्रौढायै
दुष्टसंहारसिद्धिदायै
लीलाविनिर्मितानेककोटिब्रह्माण्ड-
मण्डलायै
एकस्यै
अनेकात्मिकायै
नानारूपिण्यै
अर्धाङ्गनेश्वर्यै
शिवशक्तिमय्यै
नित्यशृङ्गारैकरसप्रियायै ४०
तुष्टायै
पुष्टायै
अपरिच्छिन्नायै
नित्ययौवनमोहिन्यै
समस्तदेवतारूपायै
सर्वदेवादिदेवतायै
देवर्षि-पितृसिद्धादियोगिनीभैरवा-
त्मिकायै
निधिसिद्धिमणीमुद्रायै
शस्त्रास्त्रायुधभासुरायै
छत्रचामरवादित्रपताकव्यज-
नाञ्चितायै ५०
हस्त्यश्वरथपदात्यमात्यसेनासुसेवितायै
पुरोहित-कुलाचार्यगुरुशिष्यादिसेवितायै
सुधासमुद्रमध्योद्यत्सुरद्रुमनिवासिन्यै
मणिद्वीपान्तरप्रोद्यत्कदम्बवनवासिन्यै

चिन्तामणिगृहान्तस्थायै
मणिमण्डपमध्यगायै
रत्नसिंहासनप्रोद्यच्छिवमञ्चाधिशायिन्यै
सदाशिवमहालिङ्गमूलसंघट्टयोनिकायै
अन्योन्यालिङ्गसंघर्षकण्डूसंक्षुब्ध-
मानसायै
कलोद्यद्बिन्दुकालिन्यातुर्यनादपरम्परायै ६०
नादान्तानन्दसन्दोहस्वयंव्यक्तवचो-
ऽमृतायै
कामराजमहातन्त्ररहस्याचारदक्षिणायै
मकारपञ्चकोद्भूतप्रौढान्तोल्लाससुन्दर्यै
श्रीचक्रराजनिलयायै
श्रीविद्यामन्त्रविग्रहायै
अखण्डसच्चिदानन्दशिवशक्त्यैक्यरूपिण्यै
त्रिपुरायै
त्रिपुरेशान्यै
महात्रिपुरसुन्दर्यै
त्रिपुरावासरसिकायै
त्रिपुराश्रीस्वरूपिण्यै ७०
महापद्मवनान्तस्थायै
श्रीमत्त्रिपुरमालिन्यै
महात्रिपुरसिद्धाम्बायै
श्रीमहात्रिपुराम्बिकायै
नवचक्रक्रमादेव्यै
महात्रिपुरभैरव्यै
श्रीमात्रे
ललितायै
बालायै ८०
राजराजेश्वर्यै
शिवायै
उत्पत्तिस्थितिसंहारक्रमचक्रनिवासिन्यै
अर्धमेर्वात्मचक्रस्थायै
सर्वलोकमहेश्वर्यै
वल्मीकपुरमध्यस्थायै
जम्बूवननिवासिन्यै
अरुणाचलशृङ्गस्थायै
व्याघ्रालयनिवासिन्यै
श्रीकालहस्तिनिलयायै ९०
काशीपुरनिवासिन्यै
श्रीमत्कैलासनिलयायै
द्वादशान्तमहेश्वर्यै
श्रीषोडशान्तमध्यस्थायै
सर्ववेदान्तलक्षितायै
श्रुतिस्मृतिपुराणेतिहासागमकलेश्वर्यै
भूतभौतिकतन्मात्रदेवताप्राणहृन्मयै
जीवेश्वरब्रह्मरूपायै
श्रीगुणाढ्यायै
गुणात्मिकायै १००
अवस्थात्रयनिर्मुक्तायै
वाग्रमोमामहीमय्यै
गायत्रीभुवनेशानीदुर्गाकाल्यादिरूपिण्यै
मत्स्यकूर्मवराहादिनानारूपविलासिन्यै
महायोगीश्वराराध्यायै
महावीरवरप्रदायै
सिद्धेश्वरकुलाराध्यायै
श्रीमच्चरणवैभवायै नमः । १०८

॥ श्रीमहात्रिपुरसुन्दरीराजराजेश्वरीपरदेवतार्पणमस्तु ॥

# सर्वावरण-समष्टि-पुष्पाञ्जलिः

[ सृष्टि-क्रमानुसारिणी ]

ॐ ऐं ह्रीं श्रीं कएईल ह्रीं हसकहल ह्रीं सकल ह्रीं लं वं सं हं ईं यं रं कं हं समस्त- परापरातिरहस्यातिरहस्य-रहस्य-निगर्भ-कुलोत्तीर्ण-सम्प्रदाय-गुप्ततर-गुप्त-मातृका-प्रकट-योगिनीदेवताभ्यो नमः ।

( इति लघुसमष्टि-मन्त्रेण पुष्पाञ्जलिं दत्त्वा
पूजनं तर्पणं नमस्करणं च कुर्यात् । )

१– बैन्दव-चक्रे

ॐ ऐं ह्रीं श्रीं हं शिवस्वरूप-बैन्दवात्मक-सर्वानन्दमय-लयलयात्मक-चक्राधिष्ठात्री-सर्वंवोरेश्वरी-हसकलरडैं हसकलरडीं हसकलरडौः-त्रिपुरभैरवीचक्र-नायिका-ऐं सर्वयोनि - मुद्रा-देवी-प्राप्तिसिद्धि-शैवदर्शन-वीरकुब्जिकाऽऽम्नाय-नायिका-युत-सर्वज्ञादि-षडङ्गयुवति-रत्यादि-षोडश-परापरयोगिनीमयूखा-४ क ५ ह ६ स ४-श्रीमहाकामेश्वर-सहित-महात्रिपुरसुन्दरीस्वरूपिणी ४ हलकस ह्रीं हसकल ह्रीं हहकल ह्रीं कं हं हस्ख्फ्रें काल-नाद-शिवस्वरूप-वसुकोण-त्रिकोण-बैन्दवात्मक-पश्चिमाम्नायसमष्टिपरपर्याय-महाकीर्तिप्रद-लयचक्राधिष्ठात्री-सर्वसिद्धेश्वरी-साङ्गा-सपरिवारा-साघोरकुब्जिकेश्वराघोरकुब्जिकाम्नायनायिकाससद्यो-जात-४ सहकल ह्रीं हसकहल ह्रीं सकल ह्रीं-पश्चिमाम्नायसुन्दरीसहितोत्तराम्नाय-तिरोधान - चक्रनिलया-दशानना-सिद्धिकराली- गुह्यकालीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

२– त्रिकोण-चक्रे

४ नादस्वरूप-त्रिकोणात्मक-सर्वसिद्धिप्रद-लयस्थित्यात्मक-चक्राधिष्ठात्री-सर्वकामेश्वरी हस्रैं हसकलरीं हस्रौः त्रिपुराम्बाचक्रनायिका हसौः सर्वबीजमुद्रादेवीच्छासिद्धि-शाक्तदर्शन-वज्रकुब्जिकाम्नायनायिकायुत - षोडशी-तुरीया-निद्रालीन-त्याऽष्टादशी- तुरीयातीता-नित्या-परौघ-पङ्क्तियुत-शिवादिस्वगुरुपर्यन्त-त्रिलीन-त्याऽष्टादशो- तुरीयातीता-नित्या-परौघ-पङ्क्तियुत-शिवादिस्वगुरुपर्यन्त-त्रिलीन-

स- ४ महात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

३- अष्टकोण-चक्रे

४ कं कालस्वरूपा-वसुकोणात्मक-सर्वरोगहर-लय-सृष्ट्यात्मक-चक्राधिष्ठात्री-सर्ववागीश्वरी ह्रीं श्रीं सौः त्रिपुरासिद्धा-चक्रनायिका ह्स्ख्फ्रें सर्वखेचरी-मुद्रादेवी- भुक्तिसिद्धि-वैष्णव -दर्शन-समयकुब्जिकाऽऽम्नायनायिकायुत- वाग्देवता-वशिन्याद्यष्ट-रहस्ययोगिनीमयूखां ४ कं वसुकोण-त्रिकोणान्तराले दिव्यौघ-सिद्धौघमानवौघ-गुरुसन्तति-गुरुपङ्क्तित्रययुत-सर्वायुधशक्तिमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

४- अन्तर्दशार-चक्रे

४ रं अग्निस्वरूपान्तर्दशारात्मक-सर्वरक्षाकर-स्थिति-लयात्मक-चक्राधिष्ठात्री-सर्वयोगेश्वरी ह्रीं क्लीं ब्लूं त्रिपुरामालिनीचक्रनायिका-क्रों सर्वमहाङ्कुशामुद्रादेवी-प्राकाम्यसिद्धि-सौरदर्शन-सिद्धिकाल्याम्नायनायिकायुत -सर्वज्ञादि-दशनिगर्भयोगिनीमयूखा- ४ हलकस ह्रीं कसहलसह्रीं ईं यं रं क्लीं मायाविश्वयोनिवाय्वग्निस्वरूपा - चतुर्दशार-वहिर्दशारान्तर्दशारात्मक-दक्षिणाम्नाय-समष्टि-परपर्याय-महाज्ञानप्रद-स्थिति-चक्राधिष्ठात्री-सर्वविद्येश्वरी-समहाकाल-दक्षिणकाल्याम्नायनायिका साघोर -कलह्रीं हसकलह्रीं सकलह्रीं -दक्षिणाम्नायसुन्दरी-सहितोत्तराम्नाय - तिरोधानचक्रनिलयां सिद्धिलक्ष्मी-स्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

५- वहिर्दशार-चक्रे

४ यं वायुस्वरूप-वहिर्दशारात्मक-सर्वार्थसाधक-स्थिति-स्थित्यात्मकचक्राधिष्ठात्री सर्वपीठेश्वरी हसैं हस्क्लीं हसौः त्रिपुराश्री-चक्रनायिका सः सर्वोन्मादिनीमुद्रादेवी-वशित्व-सिद्धि-वैदिकदर्शन- परमाद्याकाल्याम्नायनायिकायुत–सर्वसिद्धिप्रदादि-दश-कुलोत्तीर्णयोगिनीमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरी-स्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

६- चतुर्दशार-चक्रे

४ ईं मायाविश्वयोनिस्वरूप-चतुर्दशारात्मक-सर्वसौभाग्यदायकस्थितिसृष्ट्यात्मकचक्राधिष्ठात्री सर्वतत्त्वेश्वरी हैं हक्लीं हसौः त्रिपुरवासिनीचक्रनायिका ब्लूं सर्ववशङ्करीमुद्रादेवी -वशित्वसिद्धि-साङ्ख्यदर्शनाद्याकाल्याम्नायनायिकायुत-सर्वसंक्षोभिण्यादिचतुर्दश-सम्प्रदाययोगिनीमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

७– अष्टदलचक्रे

४ हं व्योमस्वरूपाष्टदलात्मक-सर्वसंक्षोभण-सृष्टिलयात्मकचक्राधिष्ठात्री-सर्वतन्त्रेश्वरी ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रनायिका क्लीं सर्वाकर्षिणीमुद्रादेवी-महिमासिद्धि-गाणपत्यदर्शन- भुवनाम्नायनायिकायुतानङ्गकुसुमाद्यष्टगुप्ततरयोगिनीमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

८– षोडशदलचक्रे

४ सं सोमस्वरूप-षोडशदलात्मक-सर्वाशापरिपूरक-सृष्टिस्थित्यात्मकचक्राधिष्ठात्री सर्वमन्त्रेश्वरी ऐं क्लीं सौः त्रिपुरेशीचक्रनायिका द्रीं सर्वविद्राविणी-मुद्रादेवी-लघिमासिद्धि-बौद्धदर्शन - पूर्णेश्वर्याम्नायनायिकायुत - कामाकर्षिण्यादि-षोडश-गुप्तयोगिनीमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

९– त्रिवृत्तचक्रे

४ वं जलस्वरूप-त्रिवृत्तात्मक-त्रिवर्गसाधनकरसृष्टिसृष्ट्यात्मकचक्राधिष्ठात्री सर्वजीवेश्वरी ऐं क्लीं ह्रीं त्रिपुरेशिनीचक्रनायिका ऐं महायोनिमुद्रादेवी-गरिमासिद्धि -स्मार्तदर्शनोन्मन्याम्नायनायिकायुत - कालरात्र्यादि-नवविंशत्यमृतादिषोडशमातृका-कामेश्वर्यादिषोडशनित्यैवमेकषष्टिमातृकायोगिनोमयूखां ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

१०– चतुरस्रचक्रे

४ लं पृथ्वीस्वरूप-चतुरस्रत्रयात्मक-त्रैलोक्यमोहन-सृष्टिसृष्ट्यात्मक-चक्राधिष्ठात्री सर्वचक्रेश्वरी अं आं सौः त्रिपुराचक्रनायिका द्रां सर्वसंक्षोभिणीमुद्रा देव्यणिमासिद्धि - कामरूपादिपीठस्थितासिताङ्गादिभैरवोत्सङ्गे ब्राह्म्याद्यष्टमातृकादेवी-सर्वसंक्षोभिण्यादिमुद्रादेव्येवमष्टाविंशतिप्रकटयोगिनीमयूखां ४ हसकल-ह्रीं हलकहस ह्रीं सकल ह्रीं हं सं वं लं व्योम-सोम-जल-पृथ्वी-स्वरूप-चतुरस्र-त्रय - त्रिवृत्तषोडशदलाष्टदलात्मकपूर्वाम्नायसमष्टिपरपर्याय-महासुखप्रद-सृष्टि-चक्राधिष्ठात्रीस र्वलोकेश्वरीससदाशिवभुवनेश्वर्याम्नायनायिकासतत्पुरुष ४ हस-ह्रीं कहह्रीं सहह्रीं पूर्वाम्नायसुन्दरीसहितोत्तराम्नायतिरोधानचक्रनिलया-सिद्धल-क्ष्मीस्वरूपिणीं ४ क ५ ह ६ स ४ श्रीमहात्रिपुरसुन्दरीस्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

११– चतुर्दशार-बहिर्दशार-निर्मितस्पन्दीचक्रे (१४+१० =२४ स्थानेषु)

४ ईं यं चतुर्दशार-बहिर्दशार-स्पन्दीचक्राधिष्ठित-चतुर्विंशति-गायत्रीवर्ण-परिवृत-बिन्दौ वेदकर्णीभूतचतुष्पादगायत्रीसहित ऐं क्लीं सौः बालात्रिपुराचक्र-नायिकास्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

१२– बहिर्दशारान्तर्दशार-निर्मितस्पन्दीचक्रे (१० स्थानेषु)

४ यं रं बहिर्दशारान्तर्दशार-स्पन्दीचक्राधिष्ठित-कालिकादि-दशमहाविद्या-परिवृतबिन्दौ ह्लीं श्रीं सौः बालासुन्दरीचक्रनायिकास्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

१३– अन्तर्दशार-वसुकोण-निर्मित-स्पन्दीचक्रे (महाबिन्दवचक्रे वा)

४ रं कं अन्तर्दशारवसुकोणस्पन्दीचक्राधिष्ठितमहाकाल्यादि-चतुरुपाम्ना-यनायिका - पूर्वाम्नायसुन्दर्यादिचतुराम्नायसुन्दरीपरिवृतबिन्दुस्थितोर्ध्वाम्नायिसु-न्दरीसहित ऐं त्रिपुरे सर्ववाञ्छितं मे देहि स्वाहा बालाभैरवीचक्रनायिकास्वरू-पिणीं पूजयामि तर्पयामि नमस्करोमि ।

१४– बिन्दुविभावित-पञ्चकोणषट्कोणयोः क्रमेण

४ हुं सर्वानन्दमयबिन्दुविभावितपञ्चकोणषट्कोणयोः क्रमेण पञ्चपञ्चि-कासहित-पञ्चसिंहासनदेवता-डाकिन्यादिपरिवृत ४ ह्लीं क ५ ह ६ स ४ श्रीललि-तामहात्रिपुरसुन्दरीचक्रनायिकास्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

१५– बिन्दुविभावितषट्कोणे

४ हुं सर्वानन्दमयबिन्दुविभावित-षट्कोणचक्राधिष्ठित-डाकिन्यादिषट्चक्र-देवीपरिवृत-याकिन्यम्बासहित- ४ क ५ ह ६ स ४ श्रीललितामहात्रिपुरसुन्दरी-चक्रनायिकास्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

१६– भूपुराद् बहिर्भागे

४ भूपुराद् बहिश्चक्राधिष्ठिताघोरादिपञ्चसमयविद्या-सन्निधि-द्वारादि-द्वारनायिकापरिवृतां ४ क ५ ह ६ स ४ श्रीललितामहात्रिपुरसुन्दरीचक्रनायिका-स्वरूपिणीं पूजयामि तर्पयामि नमस्करोमि ।

॥ श्रीपरदेवतार्पणमस्तु ॥

